दामोदरः राजाश्वः पंचाग्निः दंडिपु इत्यादिषु कार्यान्तरसंधानरूपश्च संधिर्भवति । पुनर्विशेषमाह । छंदसि वेदे लोपशि कृतेपि संधिर्भवति । यथा हेसखे अग्रे इति । ( एअय् । य्वोर्लोपश्च ) इति यकारलोपः । छांदसिकत्वात न सन्धिनिषेधः । तेन ( अ इ ए )

**( एदोतोतः ) पदांते स्थितादेकारादोकाराच्च परस्याकारस्य लोपो भवति ॥ ते अत्र तेत्र । पटो अत्र पटोत्र । ( सवर्णे दीर्घः सह । ) सवर्णस्य सवर्णे परे सह दीर्घो भवति । श्रद्धा अत्र श्रद्धात्र । भानु उदयः भानूदयः । पितृ ऋणम् पितॄणम् । दधि इह दधीह । दंड अग्रम् दंडाग्रम् ॥**

सूत्रम् ( एदोतोतः ) एच्च ओच्च एदोतः । ५–१ स्वर० ( स्त्रो० ) एदोतः । अग्रे अतः मध्ये । ( अतोत्युः । उओ । एदोतोतः ) इत्यकारलोपः । अत् ६–१ । स्वर० । ( स्त्रो० । एदोतोतः ) तपरकरणमसंदेहोच्चारणार्थम् ॥ अतः इत्यत्र तपरकरणं तावन्मात्रग्रहणार्थम् । पदांते स्थितात् एकारात् ओकारात् परस्याकारस्य लोपो भवति ॥ ते अग्रे अत्र । पदांते स्थितौ यावेकारौकारौ ताभ्यां परस्याकारस्य लोपो भवति । चंपकपटवासन्यायादखंडाकारस्तिष्ठति । तेऽत्र । एवं पटोऽत्र प्रवर्त्तते इति सिद्धम् । ( ए अय् । ओ अव् ) इति तु पदमध्ये भवति । अत्र 'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्' इति न्यायोऽङ्गीकर्त्तव्यस्तेन ( ए अय् । ओ अव् ) इति न भवति । सूत्रम् ( सवर्णे दीर्घः० ) सवर्ण ७–१ । ( अइ ए ) सदृशो वर्णः सवर्णः दीर्घः १–१ ( स्त्रो० ) सह १–१ । सु । ( अव्य० ) पूर्वापरयोः[1] सदृशस्वरयोर्मिलनेनाद्यो दीर्घो भवति । श्रद्धा अत्र श्रद्धात्र । यदुक्तम् । "क्रमेण वैपरीत्येन गुरूणां गुरुभिः सह ॥ लघूनां लघुभिः सार्द्धं चतुर्द्धेति सवर्णता" ॥ १ ॥

**"अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता । पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥ १ ॥ सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् । परेण पूर्वबाधो वा प्रायशो दृश्यतामिह" ॥ २ ॥**

अदीर्घो० । दधि अग्रे इह दधीह । भानु अग्रे उदयः भानूदयः । पितृ अग्रे ऋणं पितॄणम् । दंड अग्रे अग्रं दंडाग्रम् ॥ ननु दधि इह, अत्र कथं ( इ यं स्वरे ) इति न यत्वं भवतीत्याह । सामान्य इति । नूनं निश्चितं सामान्यशास्त्रतः सामान्यसूत्रात विशेषो विशेषशास्त्रं विशेषसूत्रं बलवान्भवेत् । तत्र बहुव्यापकं सामान्यम् । अल्पव्यापको विशेषः । दधि इह इत्यत्र ( इ यं स्वरे ) इति सामान्यसूत्रं स्वराणां बहुत्वात । ( सवर्णे दीर्घः० )

---

१ पूर्वोत्तरयोः इति पाठः ।

इति विशेषसूत्रं तस्य सवर्णस्यैकत्वात् । पक्षांतरमाह । परेण० । वा अथवा इह व्याकरणे प्रायशो बाहुल्येन बहुषु स्थानेषु परेण अंग्रेतनसूत्रेण पूर्वसूत्रस्य बाधो निषेधो दृश्यताम् । यथा (इ यं स्वरे) इति सूत्रं प्राक् प्रतिपादितं तस्य हि ( सवर्णे दीर्घः० ) इति सूत्रेण बाधः । तदेवाह प्रायशो बाहुल्येनेह व्याकरणे एवं दृश्यताम् । इत्यनेनोत्सर्गापवादावुक्तौ ॥ ततः उत्सर्गापवादयोरपवादविधिर्बलवानिति न्यायो दर्शितः । एकस्मिन्नेवोदाहरणे सूत्रद्वयसंभवे सामान्यविशेषयोर्यद्विशेषसूत्रं तल्लगति । पूर्वोक्तपरोक्तयोः सूत्रयोर्यत्परोक्तं सूत्रं तत्प्राप्नोति न तु पूर्वोक्तमिति भावः । एवं भानु उदयः । अत्र(उवम्) इति सामान्यम् । ( सवर्णे दीर्घः सह ) इति विशेषः । एवमन्यत्रापि श्लोकार्थोऽयम् ।

**( अ इ ए ) अवर्ण इवर्णे परे सह ए भवति । तव इदं तवेदं (हलादेरीषादौ टेर्लोपो वक्तव्यः) हल ईषा हलीषा । मनस् ईषा मनीषा । लांगल ईषा लांगलीषा । शक अंधुः शकंधुः । कर्क अंधुः कर्कंधुः। कुल अटा कुलटा । सीमन् अंतः सीमंतः । सार अंगः सारंगः । पतत् अंजलिः पतंजलिः । अद्य ओम् अद्योम् ॥ ( उओ ) अवर्ण उवर्णे परे सह ओ भवति ॥ गंगा उदकं गंगोदकम् । तीर्थ उदकं तीर्थोदकम् ॥ ( ऋ अर ) अवर्णादृवर्णे परे सह अर् भवति ॥ तव ऋद्धिः तवर्द्धिः ॥**

सूत्रम् । अ १–१ । सांके० इ । ७–१ । सांके० ॥ ए १–१ । सांके० ॥ तव अग्रे इदम् । ( अ इ ए ) अवर्ण इवर्णे परे सह उभयोर्योगेन ए भवति ॥ तव इदं तवेदम् । इत्युदाहरणम् । गंगा इयं गंगेयम् ॥ अत्रापि विशेषमाह । हल आदिर्यस्य स हलादिः। तस्य हलादेः । ६–१ ॥ ( ङिति । ङसिङसोरस्य ) इत्यकारलोपः ( स्त्रो० ) ईषा आदिर्यस्य स ईषादिः तस्मिन् ईषादौ । ७–१ । ङि ( ङेरौ ङित् ) औ ङित्त्वाट्टिलोपः । स्वर० । टि । ६–१ ॥ अस् ( ङिति । ङसिङसोरस्य । स्त्रो० । नामिनोरः । राद्यपो द्विः ) लोपः । १–१ । ( स्त्रोः० ) । वक्तव्यः । १–१ ( स्त्रोः० ) हलादिःशब्दगणस्य ईषादौ गणे परे टेः ( अंत्यस्वरादिष्टिः ) इति टेर्लोपो वक्तव्यः । हल अग्रे ईषा । अनेन टेर्लोपः । स्वर० । हलीषा । आदिशब्दान्मनस् ईषा मनीषा ।

---

१ वेदान्तादिष्वयमेव भूतसृष्ट्यादिक्रमे श्लोकार्थो विनियुज्यते, यथा–भूतसृष्टौ प्रथमभूतं बाधित्वा परं महाभूतं समुत्पद्यते-प्रमाणं चात्र "तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः ओषधिभ्योऽन्नम् । अन्नाद्रेतः रेतसः प्रजाः । इत्येष भूतसर्गः "इत्यादिषु पूर्वं पूर्वं बाधित्वोत्तरोत्तरं प्रवर्तते। एवोत्तरं पर्वस्माद्बलवत् ।

लांगल ईषा लांगलीषा । अद्य अग्रे ओम् अद्योम् ।शक अंधुः शकंधुः ।कुल अटा कुलटा॥ सीमन् अंतः सीमंतः । पतत् अंजलिः पतंजलिः । सार अंगः सारंगः । इत्यादयोपि तथैव ज्ञेयाः ॥ सूत्रम् (उ ओ) उ १–१ सांके० । ओ ७–१ सांके० । वृत्तिः कंठ्या । तव उदकं तवोदकम् । गंगा उदकम् गंगोदकम्। सूत्रम् । ( ऋ अर् ) ऋ ७–१ । सांके० ॥ अर् १–१ । ( हसेपः० ) अर्थो वृत्तितो ज्ञेयः । तव अग्रे ऋद्धिः ( ऋअर् ) [ जलतुंबिकान्यायेन रेफस्योर्ध्वगमनम् ] तवर्द्धिः इति सिद्धम् ।

**( क्वचिदार् ) अवर्ण ऋवर्णे परे सह समासे सति क्वचिदार्भवति । ऋण ऋणम् ऋणार्णम् । प्र ऋणम् प्रार्णम्।वसन ऋणम् वसनार्णम् । वत्स ऋणम् वत्सार्णम् । वत्सतर ऋणम् वत्सतरार्णम्। कंबल ऋणम् कंबलार्णम्। दश ऋणम् दशार्णम्।शीत ऋतःशीतार्त्तः । दुःख ऋतः दुःखार्त्तः ॥**

क्वचित् ७–१ ( अव्यया० ) । आर् । १–१ ( हसेपः० । चपा अबे० ) वृत्तेरर्थो ज्ञेयः । तृतीयासमासांते पदे इत्यर्थः । क्वचित् प्रयोगांतरे अवर्णऋवर्णे परे सति सह उभयोर्योगेन आर् भवति।ऋण ऋणम्(क्वचिदार् । राद्यपो द्विः )स्वर०जलतुंबिका० ऋणार्णम् ।एवं शीतार्तः । दुःखार्तः। वसनार्णम्।कंबलार्णम्।दशार्णम्।वत्सतरार्णम्।प्रार्णम्।

**( ऌअल् ) अवर्ण ऌवर्णे परे सह अल् भवति ।तव ऌकारः । तवल्कारः । ( रलयोःसावर्ण्यं वा वक्तव्यम् । ) होतृ ऌकारः होत्ऌकारः। तृतीयासमासे च।शीतार्त्तः। दुःखार्त्तः।तृतीयेति किम् । परमर्त्तः । परिअंकः पर्य्यंकः-पल्यंकः ॥**

( ऌ अल् ) ऌ ७–१ सांके० । अल् १–१ ( हसेपः ० ) वृत्तेरर्थो ज्ञेयः । तव अग्रे ऌकारः । ( ऌ अल् । राद्य० ) स्वर० ।तवल्कारः । नन्वत्र लकारोस्ति रकारो नास्ति ( राद्यपो द्विः ) इति कथं लगति तत्राह । रलयोरिति । रकारलकारयोः सावर्ण्य दशत्वं वक्तव्यम् । तेन ( राद्यपो द्विः ) इति ककारस्य द्वित्वे तवल्कार इति सिद्धम्।रकारलकारयोः उपचारात् वाग्रहणाद्वा वेदे ऋकारऌकारयोरपि सावर्ण्यं वक्तव्यम् । होत्ऌकारः

---

१ वृत्तौ०इ०पाठः । २ वृत्तौ इ०पा० । ३ वा ज्ञेयम् इ०पा० ।

सवर्णे होतॄकारः । अत्र ऋऌवर्णयोरसवर्णत्वेनापि रलयोरित्यनेन सावर्ण्यम् । "ऋऌवर्ण-स्थानिनोः प्रायः सावर्ण्यं रलयोर्भवेत् । तथा वेदे सवर्णत्वं स्यादृकारऌकारयोः" ॥ परि अग्रे अंकः पर्य्यंकः । एवं पलि अग्रे अंक पल्यंकः । उभयत्रापि । ( इ यं स्वरे । राद्यपो द्विः ) स्वर० सिद्धम् ।

**( ए ऐ ऐ ) अवर्ण ऐकारे एकारे च परे सह ऐकारो भवति। तव एषा तवैषा। तव ऐश्वर्य्यम्। तवैश्वर्य्यम्। (ओ औ औ) अवर्ण ओकारे औकारे च परे सह औकारो भवति । तव ओदनम्, तवौदनम् । तव औन्नत्यम् तवौन्नत्यम् ॥**

सूत्रम् ( ए ऐ ऐ ) ए ७--१।सांके०। ऐ।७--१। सांके० । ऐ१--१। सांके०।वृत्तिः कंठ्या । उदाहरणम् । तव अग्रे एषा । (ए ऐ ऐ) तवैषा । तव अग्रे ऐश्वर्य्यम् (ए ऐ ऐ) तवैश्वर्य्यम् । इति सिद्धम् । सूत्रम् । ओ १--१।सांके० । औ १--१ औ १--१ सांके० वृत्तिः कंठ्या।उदाहरणम् । तव ओदनम्।( ओ औ औ ) तवौदनम्।तव अग्रे औन्नत्यम तवौन्नत्यम् । गंगा अग्रे ओघः गंगौघः ।

**( ओष्ठोत्वोर्वा ) अवर्णस्य ओष्ठोत्वोः परयोर्वा सह ओ भवति समासे सति । बिंब ओष्ठः बिंबोष्ठः-बिंबौष्ठः । स्थूल ओतुः स्थूलोतुः–स्थूलौतुः ॥ समासे इति किम् । तवौष्ठः ।**

## इति स्वरसंधिः ।

सूत्रम् । ओष्ठश्च ओतुश्च ओष्ठोतू तयोः ओष्ठोत्वोः ७--२ ( उ वम् ) स्वर० । वा ३--१ ( अव्य० ) । ओ १--१ सांक० ( ओ औ औ ) अवर्णस्य ओष्ठोत्वोः शब्दयोः परयोः ओष्ठोत्वोः ओकारेण सह वा अकारस्य ओकारो भवति समासे सति।पक्षे (ओ औ औ ) यद्वा ( ओष्ठात्वोर्वा ) इति सूत्रम्, तदा ओष्ठोत्वोः परयोःअवर्णस्य वा लोपो भवतीति व्याख्या। बिंब अग्र ओष्ठः ।बिंबाकारावोष्ठौ यस्य स बिंबोष्ठः-बिंबौष्ठः । स्त्री चेत् बिंबोष्ठी-बिंबौष्ठी वा । अनेन एकत्र अकारलोपः । स्वर० । द्वितीये (ओ औ औ) तथैव स्थूलश्चासावोतुश्च स्थूलोतुः-स्थूलौतुर्वा । स्थूलमार्जार इत्यर्थः । समास इति किम् । हे छात्र ओष्ठं पश्य छात्रौष्ठं पश्येत्येकमेव रूपम् । एवं तवौष्ठः । इति स्वरसंधिः।

---

१ पक्षे होतॄकार होतृऌकारः वर्णविश्लेषं कृत्वा होतृऋऌकार इति जातम् । ( ऋऌोर्मिथः सावर्ण्यं वा वक्तव्यम् ) ऋस्थाने ऌः ( तोर्लि लः ) तस्य स्थाने लः ऋऌोः मिथः सावर्ण्यं वाच्यम् । ऌस्थाने ऋ ( सव० । स्वरहीनम् ) होल्लकारः इति सिद्धम् ॥ "रलयोर्डलयोश्चैव सषयोर्बवयोस्तथा । वदंत्येषां च सावर्ण्यमलंकारविदो जनाः ॥"

**अथ प्रकृतिभाव उच्यते । ( नामी ) अदसोऽमी शब्दः संधिं न प्राप्नोति । अमी आदित्याः। अमी अश्वाः । अदस इति किम् । अमो रोगस्तद्वान् अमी असौ अम्यसौ ॥**

अथ स्वरसंधिकथनादनंतरं प्रकृतिभाव उच्यते । प्रकृतेर्भावः भवनं सत्ता इति प्रकृतिर्यथावस्थितस्वरूपस्य भावो अवस्थितिर्वा प्रकृतिभावः । संधियोग्या अपि स्वराः केचित्प्रकृतिस्था एव तिष्ठंति तस्मात्प्रकृतिभाव उच्यते । संधिसंभवेपि प्रकृतिस्था एव ये तिष्ठंति ते प्रगृह्या उच्यंते । तत्रादिमं सूत्रम् ( नामी ) । न १--१(अव्य०) अदस् । १--३ ( त्यदादेः० ) सकारलोपः ( जसी । दस्य मः । अइए । एरी बहुत्वे ) एकारस्य ईकारः । अमी १--१ । सांके० । ( सवर्णे० ) नामीति सिद्धम् । अदस्शब्दस्य जसि यः अमीशब्दो निष्पन्नः सः संधिं न प्राप्नोति । अमीशब्देन रोगवानपि उच्यते तन्निरासार्थं अदस् इति पदं प्रयुक्तम् । तत्र[1] संधिः । अमी आदित्याः( इ यं स्वरे ) इति सूत्र प्राप्तावपि संधिप्रतिषेधः।एवम्, अमी ओष्ठाः।सन्धिप्रतिषेधः।एवम्, अमी एडकाः सिद्धा एव गृह्यंते । परं द्विवचने द्विवचनम् । अमी अश्वाः । अदस इति किम्।अमी असौ अम्यसौ ॥

**( य्वे द्वित्वे ) ई च ऊ च ए च य्वे । ईकारांत ऊकारांत एकारांतश्च शब्दो द्वित्वे वर्त्तमानः संधि न प्राप्नोति । ( मणीवादिवर्ज्जम्[2] ) अग्नी अत्र । पटू अत्र । माले आनय । मणीवादौ तु संधिर्भवति । मणी इव मणीव । दंपती इव दंपतीव । जंपती इव जंपतीव । रोदसी इव रोदसीव ।**

सूत्रम् । ई च ऊ च ए च य्वे १–१ । सांके० । द्वित्वे ७–१ ( अइए ) इति (य्वेद्वित्वे ) सिद्धम्।ईकार ऊकार एकाराः त्रयः सिद्धा एव गृह्यंते।परं द्विवचने द्विवचनांतः सन् ईकारांत ऊकारान्त एकारांतश्च शब्दः संधिं न प्राप्नोति इत्यर्थः।मणीवादयो न निषिद्धाः। मणी इव इत्यादीन् शब्दान् वर्जयित्वा । मण्यादीनां तु द्विवचने ईकारांतत्वेपि संधिर्भवति । अग्नी १–२ । ( औ यू । सवर्णे० ) अग्नी अत्र । द्वित्वात्तु ( इ यं स्वरे ) इति यत्वनिषेधः । एवं पटू अत्र वत्वनिषेधः । माला २–२(औरी)इति ईकारः ( अइए ) माले अग्रे आनय । अत्र ( ए अय् ) निषेधः । एवं हरी एतौ । विष्णू इमौ । गंगे

---

१ तत्र अस्मिन्शब्दे अमी इति रूपे ( इ यं स्वरे ) इत्यनेन संधिरित्यर्थः । २ व्याकरणान्तरे मणी इव इत्यादिरूपा स्थितिरेव नास्ति । किंतु इवशब्दस्य सादृश्यरूपार्थवाचको वाशब्दस्तत्रतत्र बोध्यः । तेन मणीव इत्येव स्थितिः । अस्य स्थितौ च संधेः प्राप्तिरेव नास्ति ततः [ मणीवादिवर्ज्जम् ] इति वार्तिकं त्वनावश्यकम् ।

अमू कूले अमू इत्यादि । मणीवादिवर्जमिति किम् । मणी इव दंपती इव रोदसी इव इति । सर्वत्र सवर्णे द्वित्वेऽपि मणीवादिनिषिद्धत्वात्संधिः कार्यः ।

## ( औ निपातः ) आकार ओकारनिपातः एकस्वरश्च संधिं न प्राप्नोति ।

सूत्रम्( औ निपातः ) आ १-१ सांके० ( अव्य० ) ओ १-१। सांके० अव्य० निपात्यते सिद्ध एव इति । निपातः । १-१ । ( स्त्रो० ) ननु एकस्वरश्चेति पदं सूत्रे नास्ति वृत्तौ कुतो लभ्यते तदर्थं आकारादारभ्य ओकारं यावत् औ इति प्रत्याहारं अंगीकुर्वंतीति केचित् । औ १-१ । सांके० आकारओकारएकस्वरा अत्र निपाता एव गृह्यंते । आङुपसर्गवर्जिताः वाक्ये स्मरणे च यो निपातरूप आ इत्यक्षरं संधिं न प्राप्नोति ॥

"ओत्तमैरेक्ष्यसे न त्वमामृतादेन्द्रतोखिलैः ।आ एवं सर्ववेदार्था आ एवं सद्वचो हरेः ॥ १ ॥ ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।आकारश्च ङित्संप्रोक्तो वाक्यस्मरणयोरङित्" ॥ २॥ आ एवं किल मन्यसे । नो अत्र स्थातव्यम् । अ अपेहि । इ इंद्रं पश्य । उ उत्तिष्ठ ।

तथा । ओकारः । "आहो अहो उताहो च नो हो हंहो अथो अमी । भोभोयुक्ताश्च ओदंता निपाताश्चाष्टधा स्मृताः" भोभो इत्यादिषु निपातरूपः ओकारः सोपि संधिं न प्राप्नोति । नो अत्र । अहो ईशाः । अथो एवम् । है हे इत्येतयोरपि प्रगृह्यत्वमिति केचित् । हे अंब हे ईश । तथा एकस्वरः एक एव स्वरः एकस्वरः । यद्वा केवलः स्वरमात्र एव न तु हसयुक्तो यथा प्रादात् इत्यादिवत् । यद्वा एकस्वरः सदृशस्वर अकारइकारउकाराणां निपातरूपाणां यः कश्चिदादा भवति तादृश एव स्वरः अग्रेपि भवति तदा संधिं न प्राप्नोति । यथा । अ अपेहि । इ इंद्रं पश्य ।उ उत्तिष्ठ । अ इति निर्भर्त्सने अपेहि दूरीकुरु । इ इति संबोधने विस्मये वा । इ इंद्रं पश्य। उ इति संबोधने रोषोक्तौ वा । उ उत्तिष्ठ । आग्रहणादाङुपसर्गेण सह संधिर्भवति उदाहरणं कंठ्यम् । "अत्राकार निपातस्तु ङिदाङिद्भेदतो द्विधा । तत्र यः स्याद् ङित्स एव संधिं प्राप्नोति न त्वङित्" । "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" । आ ईषत् उत्तमाः ओत्तमाः तैः इतीषदर्थे आङा सह संधिः। आ ईक्ष्यसे एक्ष्यसे।आइहि एहीत्यादौ क्रियायोगे आङा सह संधिः।आ अमृतात् आमृतात् अमृतं मोक्षं मर्यादीकृत्य इति मर्यादायाम्। आ इंद्रतः एंद्रतः । इंद्रमभिव्याप्य इति अभिविधौ च आङा सह संधिः । मर्यादा सीमा। अभिविधिः अभिव्याप्तिः । मर्यादा च अभिविधिश्च मर्यादाभिविधीः तस्मि

न्सर्वोपि द्वंद्वो विभाषयैकवचनांतः स्यात् । ( एकत्वे द्विगुद्वंद्वौ ) इति नपुंसकत्वम् । अनित्यं आगमानुशासनम् । इति ( नामिनः स्वरे ) इति नुमागमो न किंतु ( ङेरौ ङित् ) तथा आ इति आक्षेपे । आ एवं किल मन्यसे । आ इति वाक्ये । आ एवं ईश्वरवचनमिति स्मरणे । स्मरणीयमित्यर्थः । अनाङ् आकारः संधिं न प्राप्नोति ॥

**( प्लुतः ) प्लुतः संधिं न प्राप्नोति । देवदत्त३ एहि । ( दूरादाह्वाने टेः प्लुतः ) दूरादाह्वाने गाने रोदने विचारे च गम्यमाने टेः प्लुतो भवति । इति प्रकृतिभावः ।**

सूत्रम्( प्लुतः ) १–१ ( स्त्रो० ) यत्र प्लुतस्तत्र संधिर्न भवति । भो देवदत्त ३ एहि "का एषा प्रस्तुतांगी प्रचलितनयना हंसलीला व्रजन्ती द्वौ पादौ कुंकुमार्द्रौ कनकविरचितौ नूपुरं शब्दयन्ती । इत्थं मार्गे गता सा बहुकुसुमलताबद्धवेणी स्वनंती तांबूलं वामहस्ते मदननिवसिता गुह्यशालां विवेश" ॥१॥ अत्र विचारे टेः प्लुतत्वं तेन संधिर्न । क्वचित्तु संधिः क्वचित्तु ( प्लुतोनितौ ) इति सूत्रं पठंति तेन प्लुतोपि इति शब्दे परे संधिं न प्राप्नोति । यथा हा तात इति हा तातेति । देवदत्तेत्यादौ संधिर्भवति । प्लुतलक्षणमाह । सूत्रम् । ( दूरादाह्वाने० ) दूरात् ५–१ । ( ङसिरत् । सवर्णे० ) आह्वाने ७–१ ( अइए ) टि ६–१ ( ङिति । ङसिङसोरस्य ) इत्यकारलोपः । ( स्त्रो० ) प्लुतः १–१ ( स्त्रो० ) वृत्तिः कंठ्या । प्लुतस्तु उच्चारणमात्र एव नतुलिखनरूपः । इति प्लुतलक्षणम् । इति प्रकृतिभावः ।

# अथ व्यञ्जनकार्यमुच्यते ।

**( चपाअबे जबाः ) पदांते वर्त्तमानाश्चपा जबा भवंत्यबे परे । षट् अत्र षडत्र । अच् अंतम् अजंतम् । तत् एतत तदेतत् । ककुप ऐंद्री ककुबैंद्री । वाक् यथा वाग्यथा ॥**

अथ प्रकृतिभावकथनानंतरं व्यंजनकार्यमुच्यते व्यंजनानां संधिः कथ्यते इत्यर्थः ॥ सूत्रम्( चपा ( अबे जबाः) चकारपराभ्यां गृह्यमाणाः वर्णाश्चपाः । चप १–३( सवर्ण० । स्त्रो०) अकारबकाराभ्यां गृह्यमाणः प्रत्याहारो अबस्तस्मिन् अबे ७– १ (अइए ) जकारबकाराभ्यांगृह्यमाणा वर्णा जबाः । जब १–३ ( स्त्रो० ।सवर्णे० ) सिद्धम् । चपा जबा अबे,इति वक्तव्ये चपा अबे जबा इत्युक्तं तेन क्वचित्पदांतं विनापि जबा भवंति यथा सद्गुरुर्भवदीयः इत्यादि । तथा क्वचिन्न भवति । यथा वैवस्वतः ।सरस्वान् ।मरुत्वान् । तडित्वान् । वाचालः वाचाटः । इत्यादौ न । अथवा असमासे साक्षादेव पदां-

---

१ प्लुतश्च । इतिपाठः । २ का एषा इत्यत्र कैषेतिसंधिप्राप्तौ प्लुतत्वान्नसंधिरित्यर्थः ॥

तिसमासादौ त्वंतर्वर्तिनीं विभक्तिमाश्रित्य पदांत इति वाच्यम् । पदांते स्थिताः चपा जबाः भवंति । चटतकपानां क्रमेण ज १ ड २ द ३ ग ४ बा ५ भवंति अबे परे । षट् अग्रे अत्र । वाक् अग्रे यथा । उभयत्रापि । (चपा अबे जबाः) इत्यनेन डकारगकारौ भवतः । यथा । टस्य डः । कस्य गः । स्वर० । षडत्र । वाग्यथा । एवं अच् अंताः अजंताः । हरित् अश्वः हरिदश्वः । ककुप् एषा ककुबेषा । इति सिद्धम् । दिश् अंबरः।दिश् अंतः । अत्र पदांतताश्रयणात् ( दिशाम् ) इति कः । पश्चात (चपा अबे जबाः ) । दिगंबरः । दिगंतः । वाच् ईशः । अत्रापि पदांतताश्रयणात् ( चोः कुः ) पश्चात् ( चपा अबे जबाः ) वागीशः । अबे परे इति किम् । वाक्पूतः । षट्कुर्वंति ॥

( ञमे ञमा वा ) पदांते वर्तमानाश्चपा ञमे परे ञमा वा भवंति । वाक् मात्रम् वाङ्मात्रम् वाग्मात्रम् । षट्मम षण्मम षड्मम । ( मयटि नित्यं वाच्यम् ) चित् मयम् चिन्मयम् । वाक् मयम् वाङ्मयम् ( चपाच्छःशः ) चपादुत्तरस्य शकारस्य छोवा भवति अबे परे । वाक् शूरः वाक्छूरः ॥

सूत्रम् ( ञमे ञमा वा ) ञकारमकाराभ्यां गृह्यमाणः प्रत्याहारो ञमस्तस्मिन् ञमे ७--१ ( अ इ ए ) ञकारमकाराभ्यां गृह्यमाणा वर्णाः ञमाः । ञम १--३ । ( सवर्णे० । स्त्रो० ) वा ३--१ ( अव्य० । आदबे लोपश् ) चपानां ञमप्रत्याहारे परे वा विकल्पेन ञमा भवंति । च १ ट २ त ३ क ४ पा ५ नां क्रमेण ञ १ ण २ न ३ ङ ४ मा ५ भवंति । वाग्रहणात्पक्षे जबा अपि भवंति । वाङ्मात्रम् वाग्मात्रम् । एकत्र ङः । अन्यत्र गः स्वर० । षट् अग्रे मम । एकत्र णः । अन्यत्र डः षण्मम-षड्मम।स्वर० । तत् नयनम् तन्नयनम् तद्नयनम् । अप् मयः अम्मयः।मयटि प्रत्यये परे तु नित्यमेव ञमाः स्युः।यथा चिन्मयम्, वाङ्मयम् । अत्र न विकल्पः । तथा च वाग्रहणादेव क्वचिज्जबस्यापि ञमाः स्युः । यथा मृद्मयः--मृन्मयः । सूत्रम् । ( चपाच्छःशः ) चप ५--१ ( ङसिरत। सवर्णे० ) चपात् अग्रे छः ( स्तोः श्चुभिः श्चुः ) इति तकारस्य चः । स्वर० १ । छ १--१ । । स्त्रो० ( विसर्जनीयस्य सः । स्तोःश्चुभिःश्चुः ) स्वर० । श ६--१ । स्वर० ( स्त्रो० ) सिद्धम् । चपादुत्तरस्य शकारस्य छः छकारो भवति वा विकल्पेन । वाक् अग्रे शूरः । अनेन शकारस्य छकारः । स्वर० । वाक्छूरः पक्षे वाक्शूरः । इति सिद्धम् । छःशः इति विपरीतग्रहणात् वाक् श्चोततीत्यादौ छत्वं न स्यात् ।

( हो झभाः ) चपादुत्तरस्य हकारस्य झभा वा भवंति । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति । वाक् हरिः वाग्घरिः वाग्हरिः । तत् हविः तद्धविः तद्हविः ॥

सूत्रम् ( हो झभाः ) ह ६--१ । स्वर० (स्रो०) झभ १–३ ( सवर्णे० । स्रो० ) यस्य वर्गस्य संबंधी चपो हकारात्पूर्वं भवति तस्य वर्गस्य चतुर्थाक्षरं हकारस्थाने भवति। यथा ककारात्परस्य हस्य घः । चकारात्परस्य हस्य झः। टकारात्परस्य हस्य ढः। तकारात्परस्य हस्य धः । पकारात्परस्य हस्य भः "यद्वर्गस्य चपः पूर्वंहकारात्किल दृश्यते । हस्य स्थाने भवेद्वर्णस्तद्वर्गस्य चतुर्थकः" ॥ १ ॥ वर्गचतुर्थो हस्य सवर्ण इति वाग्रहणात्कचित्चपादनुत्तरस्यापि हस्य झभा भवंति । यथा समिद् होमः समिद्धोमः । हकारस्य धः ( झबे जबाः ) इति सिद्धम् । यद्वा क्वचिदनवसानेऽप्यवसानता ग्राह्या । तेन (वावसाने)इति धकारस्य तकारः । पश्चात् ( हो झभाः ) इत्यादि । एवं तत् हितः तद्धितः । तत् अग्रे हविः। ( हो झभाः ) इति हकारस्य धकारः । पश्चात् ( चपा अबे जबाः ) तस्य दः ( स्वर० ) तद्धविः । तत् घृतम् इत्यर्थः । वाक् अग्रे हरिः । हस्य घः पूर्ववत् (चपा अबे जबाः) इति कस्य गः । वाग्घरिः । वाचा कृत्वा हरिः सिंहः इति सिद्धम् । अच् अग्रे हलौ अज्झलौ-षट् अग्रे हलानि षड्ढलानि । ककुप् अग्रे हासः ककुब्भासः ।

( स्तोः श्चुभिः श्चुः ) स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः। सकारस्य-शकारः तवर्गस्य चवर्गः । कस् चरति कश्चरति । कस् शूरः कश्शूरः । तत् चित्रम् तच्चित्रम् । तत् शास्त्रम् तच्छास्त्रम् ।

सूत्रम् ( स्तोः श्चुभिः श्चुः ) स् च तुश्च स्तुः तस्य स्तोः ६--१ । ( ङिति । ङसिङसोरस्य ) इत्यकारलोपः । ( स्रो० ) शृच् चवश्च श्चवस्तैः श्चुभिः ३ -३ ।(स्रो०)।श् च चुश्च श्चुः १--१ ( स्रो० ) अत्र ( एकत्वेऽपि द्विगुद्वंद्वौ ) इति नपुंसकलिंगं युज्यते। परं छंदोवत् सूत्राणीति छांदसत्वात् पुँल्लिंगत्वम्। श्चुभिरित्यत्र बहुवचनमयथासंख्येन योगज्ञापकं तेन सकारस्य शकारचवर्गयोगं पूर्वतः परत उभयत्रापि[1] संबंधे सति शकारः स्यात् । तवर्गस्य शकारचवर्गयोगे चवर्गः स्यात । कस् चरति । कस् अग्रे शूरः । उभयत्रापि शकारः । स्वर० । कश्चरति । कश्शूरः । तत् चित्रम् । तस्य चः। स्वर० ।तच्चित्रम्। तत् श्रवणम् । तत् शास्त्रम् । उभयत्रापि तस्य चः। (चपाच्छःशः) कस् छादयति कश्छादयति । अत्र सकारस्य शकारः । स्वर० । सत् अग्रे झंझा ( स्तोः श्चुभिःश्चुः) इति तस्य चः ( चपा अबे जबाः ) चस्य जः । स्वर० । सज्झंझा ।

( न शात् ) शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति । प्रश् नः प्रश्नः । विश् नः विश्नः । (ष्टुभिः ष्टुः ) स्तोः सकारतवर्गयोः षकारटवर्गाभ्यां योगे ष्टुर्भवति । सकारस्य षकारः त-

---

१ उभयथापीत्यपि पाठः ।

**वर्गस्य टवर्गः । कस् षष्ठः कष्षष्ठः । कस् टीकते कष्टीकते । तत् टीकते तट्टीकते ॥**

सूत्रम् ( न शात् ) न १–१ । (अव्य०) । श ५–१ (ङसिरत् । सवर्णे० ) शकारादुत्तरस्य तवर्गस्य चुत्वं चवर्गो न भवति । प्रश् अग्रे नः । विश् अग्रे नः । रूपद्वयेपि चवर्गस्य निषेधः । किंतु । स्वर० । प्रश्नः । पृच्छनं प्रश्नः । विश्नः विशतीति विश्नः । विच्छगतौ विच्छनं विश्नः । सूत्रम् ( ष्टुभिः ष्टुः ) ष् च टुश्च ष्टवस्तैः ष्टुभिः ३–३ । ष् च टुश्च ष्टुः १–१ । ( स्तो० ) ष्टुभिरित्यत्रापि बहुवचनमयथासंख्ययोगसूचकम् । स्तोः सकारतवर्गयोः षकारटवर्गयोगे षकारटवर्गौ यथासंख्यं भवत इत्यर्थः । सकारस्य षकारः । तवर्गस्य टवर्गः । कस् अग्रे षष्ठः । कस् अग्रे टीकते । उभयत्रापि सस्य षः । स्वर० । कष्षष्ठः । कष्टीकते । कः समर्थो भवतीत्यर्थः । टीकृ गतौ सामर्थ्ये च । तत् अग्रे टीकते अनेन तस्य टः । स्वर० । तट्टीकते । विद् अग्रे ठलः । पूर्व ( खसे चपा० ) ततः ( ष्टुभिः० ) विट्ठलः ।

**( तोर्लि लः ) तवर्गस्य लकारे परे लकारो भवति । तत् लुनाति तल्लुनाति । भवान् लिखति भवाँल्लिखति । अंतस्था द्विप्रभेदाः । रेफवर्ज्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक एव लकारः सानुनासिकस्य नकारस्य भवति ।**

सूत्रम्( तोर्लि लः ) तु ६–१ ( ङिति ) तु इत्यस्य तो ( ङसिङसोरस्य । स्तो० ) तोः । अग्रे ल् ७–१ । स्वर० । ( नामिनो रः ) जलतुम्बि० । लि । ल १–१ ( स्तोः० ) तवर्गस्य उदाहरणम् । तत् अग्रे लुनाति । अनेन तस्य लकारः । स्वर० । तल्लुनाति । भवान् अग्रे लिखति । (तोर्लि लः) । इति नस्य लत्वे कृते । अंतस्था द्विप्रभेदाः । उच्चारणकाले जिह्वाया अन्ते तिष्ठंतीति अन्तस्थाः । अथवा वर्णानां अंते तिष्ठंतीति अंतस्थाः । ते के य रलवाः ते च द्विप्रकाराः । कथंभूताः रेफेण रकारेण वर्ज्जिताः शेषा यवला इत्यर्थः । कथं द्विप्रभेदा इत्याह । सानुनासिका निरनुनासिकाश्च तत्र तथदधानां स्थाने लकारो निरनुनासिको भवति नकारस्य सानुनासिकत्वान्नकारस्थाने लकारोपि सानुनासिक एव भवति तेन पूर्ववकारस्योपरि अर्द्धानुस्वारो भवति । स्वर० । भवाँल्लिखतीति सिद्धम् ।

**( न षि ) षकारे परे तवर्गस्य टुत्वं न भवति । भवान् षष्ठः भवान्षष्ठः । ( टोरंत्यात् ) पदांते वर्त्तमानाट्टवर्गात्परस्य स्तो ष्टुर्न भवति । षट् नरः षड्नरः षण्णरः । षट् सीदंति षट्सीदंति**

सूत्रम् ( न षि )न १–१ । ( अव्य० )।षू९–१ । स्वर० । षकारे परे तवर्गस्य टवर्गो न भवति । भवान् षष्ठः । अत्रानेन ( ष्टुभिः ष्टुः ) इति प्राप्तस्य टवर्गस्य निषेधः।किंतु।स्वर० । प्रकृतिभाव एव ।सूत्रम्(टोरंत्यात् ) टु ५–१ । ( ङिति )टो इत्यस्य टे ( ङसिङसोरस्य ) इत्यकारलोपः ( स्त्रो० ) टोः।अग्रे अंत्य ( नामिनो रः ) स्वर० । अन्त्य५–१ (ङसिरत । सवर्णे दीर्घः । ) पदांते वर्त्तमानो यः टव स्तस्मादुत्तरयोः परयोः सकार तवर्गयोः षकारटवर्गौ न भवतः ।परम् नाम्नवतिनगरीवर्ज्जम् । उदाहरणम् ।षट् अग्रे नरः। अत्र टुत्वनिषेधः । ततो ( ञमे ञमा वा ) चटञण । स्वर० । षण्नरः । पक्षे षड्नरः। ना नरौ नरः इति बहुवचनम् । षट् अग्रे सीदंति । अत्र षत्वनिषेधः । नाम्नवतिनगरीवर्जनात् । षण्णाम् । षण्णवतिः । षण्णगर्यः । अत्र ( टोरंत्यात् ) इति सूत्रं न लगति किंतु । ष्टुभिः ष्टुः । इति भवति । स्वर० ।

**( नः सक् छते ) नांतस्य पदस्य छते परे सगागमो भवति। (टित्कितावाद्यंतयोर्वक्तव्यौ) टित्वादादौ कित्त्वादंते। राजन् चित्रम् राजंश्चित्रम्। भवान् तनोति भवांस्तनोति।**

सूत्रम् । न् ६–१ । स्वर० । ( स्त्रो० ) सक् १–१ । ( हसेपः० ) छत ७–१ ( अ इ ए )त्रिपदम्। नान्तस्य नकारांतस्य पदस्य छते छठथचटतत्वलक्षणे प्रत्याहारे सक् इत्यागमो भवति।कक्कारः स्थाननियमार्थः।तमेवाह । ( टित्कितौ० ) । ट् इत् यस्यासौ टित् क् इत् यस्यासौ कित् । टिच्च किच्च टित्कितौ टित्कितावागमौ क्रमेण आद्यंतयोर्विधेयौ भवतः । टित् आदौ कित् अंते इत्यर्थः । अत्र कित्त्वात् अन्ते । राजन् अग्रे चित्रम् भवान् अग्रे तनोति । उभयत्रापि सगागमः। अकार उच्चारणार्थः। एकत्र (स्तो श्चुभिः श्चुः) इति सस्य शः । उभयत्रापि स्वर० । 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेनैव गृह्यंते' इति आगमांतं पदमित्यपदांतत्वान्नकारस्य । नश्चापदांते झसे । इत्यनुस्वारः।

**( शे चक् वा) नांतस्य पदस्य शे परे वा चगागमो भवति भवान् शूरः, भवाञ्च्छूरः, भवाञ्च्शूरः, भवाञ्शूरः।(ङ्णनो ह्रस्वाद्द्विः स्वरे) ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवन्ति स्वरे परे पदांते । प्रत्यङ् इदम् प्रत्यङ्ङिदम् । सुगण् इह सुगण्णिह । राजन् इह राजन्निह ।**

सूत्रम् । ( शे चग्वा ) श ७–१ । ( अ इ ए ) चक् १–१ । ( हसे ० ) वा १–१ । अव्य० । नांतस्य इति । नकारांतस्य पदस्य शे शकारे परे वा विकल्पेन चक् आगमः स्यात् । भवान् अग्रे शूरः ३ । अत्र ( चपाच्छः शः) इति सूत्रस्य वि

ल्पन प्रास्यर्थं रूपद्वये चगागमः । च पदत्रये पि ( स्तोः श्चुभिः श्चुः ) नस्य ञः । प्रथमरूपे ( चपाच्छः शः ) शस्य छः सर्वत्र स्वर० । भवाञ्च्छूरः भवाञ्च्शूरः भवाञ्शूरः । तृतीयरूपे चगागमाभावे भवाञ्शूरः । सूत्रम् ( ङ्णनो ह्र० ) ङ् च ण् च न् च ङ्णन् १-३ स्वर० । ( स्रो० ) अग्रे ह्रस्वात् ५--१ । पूर्वम् ( हबोउओ ) द्विः १--१ । ( अव्य० । चपा अबे जबाः ) स्वर ७--१ । (अ इ ए) सिद्धम् । ह्रस्वादुत्तराः परा ये ङकारणकारनकारास्ते द्विर्भावमापद्यंते द्वौ भवतः इत्यर्थः । स्वरे परे पदांते विषये । अत्र पुनः स्वरग्रहणं विभक्तिस्वरनिषेधार्थम् । प्रत्यङ् अग्रे इदम् । गण संख्याने । सुपूर्वः सुष्ठु गण यतीति सुगण् क्विबंतः । सुगण् अग्रे इह । राजन् अग्रे इह । सर्वत्रापि द्वित्वम् । स्वर०-प्रत्यङ्ङिदम् । सुगण्णिह । राजन्निह ।

**( छः ) ह्रस्वादुत्तरश्छकारो द्विर्भवति ।(खसे चपा झसानाम्) झसानां खसे परे चपा भवंति । तव छत्रम् तवच्छत्रम् । ( क्वचिद्दीर्घादपि वक्तव्यः) ह्रीछः ह्रीच्छः।म्लेछः म्लेच्छः ।**

सूत्रम् । छ १--१ । ( स्रो० ) एकपदम् । वृत्तिः कंठ्या । उदाहरणम् । तव अग्रे छत्रम् अनेन छस्य द्वित्वम् । तव छ् छत्रमिति स्थिते । सूत्रम् ( खसे चपा झसानाम् ) खस ७-१ ( अ इ ए ) चप १--३ ( सवर्णे० । स्रो० ) झस ६-३ ( नुडामः । नामी ) इति दीर्घः। स्वर० । सिद्धम् । झसानां चपाः भवंति खसे परे । अत्र यथासंख्यगणनात् छस्य तकारः संभवति।परम् वर्ग्यो वर्ग्येण सवर्ण इति वचनात् चकार एव क्रियते । स्वर० । तवच्छत्रमिति सिद्धम्।पक्षांतरमाह।दीर्घादित्यादि । क्वचित् कस्मिंश्चित्स्थाने दीर्घादुत्तरोऽपि छकारो द्विर्भवति । यथा म्ले अग्रे--छः । ह्री अग्रे--छः । रूपद्वयेप्यनेन द्वित्वे विहिते प्राग्वत् । ( खसे च० ) स्वर०।म्लेच्छः । म्लेच्छ अव्यक्ते शब्दे । म्लेच्छयतीति म्लेच्छः । अथवा म्लै गात्रविनामे । म्लायते इति म्लेच्छः । ह्रीच्छः। ह्रीच्छ लज्जायां ह्रीच्छतीति ह्रीच्छः । एवं आच्छादयति । ह्रीच्छाति । ऐच्छत् । माच्छिदत् ।स्त्रीच्छाया। इत्यादौ दीर्घात्परस्य छस्य द्वित्वम् ।

**( मोऽनुस्वारः ) मकारस्यानुस्वारो भवति हसे परे पदांते । तम् हसति तं हसति । पटुम् वृथा पटुं वृथा ।**

सूत्रम् ( मोऽनु० ) म् ६-१ । स्वर० । ( स्रो० ) मः । अंग्रेऽनुस्वारः १-१। ( स्रो० ) मध्ये ( अतोऽत्युः । उओ । एदोतोऽतः ) मकारस्य हसे परे पदांते सत्यनुस्वारो भवति । उदाहरणम् । तम् अग्रे--हसति । पटुम् अग्रे--वृथा । उभयत्राप्यनुस्वारः । तं हसति । पटुं वृथा । पदांते इति किम् । गम्यते इत्यादौ अनुस्वारो न ।

**( नश्चापदांते झसे । ) नकारस्य मकारस्य चापदांते**

वर्तमानस्यानुस्वारो भवति झसे परे। यशान् सि यशांसि। पुम्भ्याम् पुंभ्याम्।

सूत्रम् ( नश्चापदां० ) न ६–१।स्वर०।( स्तो० ) अग्रे। च १–१। ( अव्य० विसर्जनीय०। स्तोः श्चु० ) सस्य शः। स्वर०। अग्रे अपदांते। ७–१ ( अ इ एासवर्णे० ) झस ७–१।( अ इ ए ) सिद्धम्। चकारः पूर्वोक्तस्य ( मोऽनुस्वारः ) इत्यतो म इत्यस्यानुकर्षणार्थः। तेन उभयोरप्यपदांते पदमध्ये वर्तमानयोर्नकारमकारयोर्झसे परे अनुस्वारो भवति। यशस् १–३ ( जश्शसोः शिः। नुमयमः। मिदंत्यात्स्वरात्परो०। न्सम्महतो० ) ततो यशान् अग्रे सि। पुम् अग्रे भ्याम्। उभयत्राप्यनुस्वारः। यशांसि। पुंभ्याम्। एवं पयान् अग्रे सि पयांसि।

( यमा यपेऽस्य वा ) अनुस्वारस्य यमा वा भवंति यपे परे। अस्य यपस्य सवर्णाः। तं करोति तङ्करोति। तं तनोति तन्तनोति। ( यवलपरे यवला वा ) अनुस्वारस्य यवलपरे तु सानुनासिका एव यवला वा भवंति। संयन्ता सँय्यन्ता। यं लोकं यँल्लोकम्। संवत्सरः सँव्वत्सरः( स्वरे मः )अनुस्वारस्य मकारादेशो भवति स्वरे परे। अस्माकं इह अस्माकमिह। शं अस्ति शमस्ति। सुखं एति सुखमेति। ( ॅ छंदांसि ) छंदस्यनुस्वारोॅकारमापद्यते शषसहरेफेषु परतः। हंसः हॅसः।

इति व्यंजनसंधिः।

सूत्रम् ( यमा यपे० ) यम १–३। ( सवर्णे०। स्तो०। यमाः। अग्रे–यपे- ७–१ ( अ इ ए ) प्राक् ( आदबे० ) विसर्गलोपः। अग्रे इदम् ६–१ ( त्यदादेष्टेरः स्यादौ। दस्य मः। ङसूस्य। स्भ्यः ) इदमः स्थाने अ ( एदोतोतः ) वा ३–१ अव्य० ) अनुस्वारस्य यमा वा भवंति पक्षे अनुस्वार एव तिष्ठति यपप्रत्याहारे परे। कथमित्याह। अस्य अग्रे वर्तमानस्य यपस्य सवर्णा एव यमा भवंति। अनुस्वारस्य सानुनासिक्यात् ये सानुनासिका यमाः त एव भवंति। वर्ग्यो वर्ग्येण सवर्ण इति वचनात्। वर्ग्ये अक्षरे परे तद्वर्गस्य पंचमाक्षरं भवति। अन्यत्र यादृशो यपोऽग्रे भवति तादृश ए-

---

१ ( नोपधायाः० ) –इतिपाठः पुस्तकान्तरे दृश्यते–परं सोत्र ' यशनस् इ इत्यस्मिन्नुदाहरणे दीर्घ विधातुमप्राप्तेस्तस्य सूत्रस्याप्रायोजनिक एव ' यशनस् ' इत्यस्य सकारान्तत्वाच्छुक्तोऽयमत्र'न्सम्महतो दीर्घः शौ च' इति पाठ इति सुधियो विदांकुर्वन्तु।

व क्रियते । यथा कवर्गे परे ङकारः चवर्गे परे ञः । टवर्गे परे णः । तवर्गे परे नः । पवर्गे परे मः । यवलेषु परेषु यवला एव स्युः । उदाहरणम् । त्वं अग्रे करोषि । तं अग्रे तनोति । ककारे परे अनुस्वारस्य ङः । तकारे परे अनुस्वारस्य नः । स्वर० । त्वङ्करोषि । तन्तनोति । सं अग्रे यंता । अत्रानुस्वारस्य यः अग्रे च ( अंतस्था द्विप्रभेदाः ) इति सानुनासिकत्वात् सस्य उपरि अर्द्धचन्द्राकारो बिंदुः । सँय्यंता । एवं संवत्सरः सँव्वत्सरः । पुंल्लिंगः । पुँल्लिंगः । अत्र केचित् ( स्वरे मः ) अनुस्वारस्य मकारो भवति स्वरे परे । इति सूत्रं पठन्ति । परं स्वरे परे पूर्वम् ( मोऽनुस्वारः ) एव न भवति किंतु स्वरहीनमेव स्यात् । कृष्णो माम् अवतु कृष्णो मामवतु । जिनम् ईडे जिनमीडे शम् अस्ति शमस्ति । अस्माकम् इह अस्माकमिह । ( ङ्णोः कक् टक् वा ) ङकारणकारयोः शषसेषु परेषु क्रमेण कक् टक् आगमौ वा स्तः । प्राङ् षष्ठः प्राङ्क्षष्ठः । लिङ् सु लिङ्क्षु । सुगण्षष्ठः सुगण्ट्षष्ठः ( ᳲ छंदसि ) अनुस्वारः ᳲकारमापद्यते शषसहरेफेषु परतः छंदसि वेदे । हंसः हᳲसः । सुचीं षत् सुची ᳲषत् । वयं साम वयᳲ साम । सं हिता सᳲ हिता । तं रविः तᳲ रविः । इति चतुर्थसंध्यनुसारेण व्यंजनसंधिरेवावचूरिलेशतो लिखितः । इति व्यंजनसंधिः संपूर्णः ।

# अथ विसर्गसंधिर्निगद्यते ।

**( विसर्जनीयस्य सः ) विसर्जनीयस्य सकारो भवति खसे परे । कः तनोति कस्तनोति । ( शषसे वा ) विसर्जनीयस्य शषसे परे शषसा वा भवंति । कः शेते कश्शेते । कः षंढः कष्षंढः । कः साधुः कस्साधुः ।**

अथेति । व्यंजनकार्यकथनानंतरं विसर्गाणां संधिर्निगद्यते कथ्यते । द्वौ बिंदू विसर्गः । सूत्रम् ( विसर्जनीयस्य सः ) विसर्जनीय ६—१ (ङस्स्य) अग्रे । स १—१ । ( स्रो० ) सिद्धम् । विसर्जनीयस्य सकाररकारोत्पन्नस्य कृष्णसर्पचक्षुराकारबिंदुद्वयरूपस्य खसे परे सकारो भवति । श्लोको यथा "शृंगवद्बालवत्सस्य कुमारीस्तनयुग्मवत् । नेत्रवत्कृष्णसर्पस्य स विसर्ग इति स्मृतः" ॥ उदाहरणम् । कः अग्रेतनोति । अनेन विसर्गस्य

---

१ कस्मिंश्चित्पुस्तके 'यरलवेषु' इति पाठः । २ कस्मिंश्चित्पुस्तके 'पुँल्लिंगः' इत्यस्योत्तरं 'संरमते सँरमते' इति पाठो दृश्यते । परंतु रेफे परेऽनुनासिकविधानं वैदिकप्रयोगेष्वेव बाहुल्येन दृश्यते नतु लौकिकेषु । अतएव अग्रे ( छंदसि ) इति सूत्रस्य तंरविः तᳲरविः इत्युदाहरणं संगच्छेत । ३ पुस्तकान्तरे तु बाहुलकभेदव्याख्यानानंतरं वैदिकप्रयोगव्याख्यानावसरे ( शषसहरेफेषु छन्दसि अनुस्वारस्य ᳲकारो वा वक्तव्यः ) इति वार्त्तिकमुक्त्वा हᳲसः हंस इत्युदाहरणद्वयमुपन्यस्तं दृश्यते ।

सकारः ।स्वर० । कस्तनोति । ( शषसे वा ) द्विपदं सूत्रम् । विसर्जनीयस्य शषसेषु परेषु शषसा एव वा भवंति । पक्षे विसर्जनीय एव तिष्ठति । कः शेते कश्शेते । कः षंढः कष्षंढः । कः साधुः कस्साधुः । क्षेपकसूत्रमिदम् ।

( कुप्वोः ᳵकᳵपौ वा ) विसर्जनीयस्य कवर्गपवर्गसंबंधिनि खसे परे ᳵकᳵपौ वा भवतः । कपावुच्चारणार्थौ । कः करोति कᳵकरोति । कः पचति कᳵपचति । कः खनति कᳵखनति । कः फलति कᳵफलति । ( वाचस्पत्यादयः संज्ञाशब्दा निपातात्साधवः ) वाचस्पतिः । बृहस्पतिः।कारस्करः । पारस्करः । राजन् तुंदम् राजंस्तुंदम् । हरिः चन्द्रः हरिश्चंद्रः । ( तद्बृहतोः करपत्योश्चौरदेवतयोः सुट्तलोपश्च ) तत् करः कस्करः । बृहत् पतिः बृहस्पतिः ।

पुनर्विशेषमाह । सूत्रम् । (कुप्वोः ᳵकᳵपौ वा) कुश्च पुश्च कुपू तयोः कुप्वोः ६–२ ( उ वम् ) स्वर० ( स्त्री० )अग्रे–ᳵ कश्चᳵपश्चᳵकᳵपौ १–२ ( ओ औ औ ) वा ३–१ ( अव्य० ) विसर्जनीयस्य कवर्गपवर्गसंबंधिनि कखपफरूपे खसे परेᳵकᳵपौ जिह्वामूलीयोपध्मानीयसंज्ञौ यथासंख्यं वा भवतः । पक्षे विसर्जनीय एव तिष्ठति । अयमर्थः कखयोः परयोः ᳵकः । पफयोः परयोः ᳵपः । कपौ ककारपकारावुच्चारणार्थौ अन्यथोच्चरितुमशक्यत्वात् । अतो वज्राकारगजकुंभाकारौ तिष्ठतः । कः अग्रे–करोति । अत्र विसर्गः । कᳵकरोति । कः अग्रे पचति । कᳵपचति । एवं कᳵखनति । कᳵफलति । वाचस्पत्यादयः संज्ञाशब्दाः संज्ञावाचकाः कस्यापि नामप्रतिपादकाः शब्दाः तेऽपि निपातनात्साधवः निपातसिद्धा एव ज्ञेयाः । यथा । वाचस्पतिः । अत्र ( कुप्वोःᳵकᳵपौ वा ) इत्यस्य प्राप्तावपि विसर्जनीयस्य सकार एव निपात्यते । एवं भास्करः । श्रेयस्करः । श्रेयस्कामः । अयस्कांतः ।अयस्कुंभः । अयस्पात्रम् । तमस्कांडः । दिवस्पतिः । नमस्कारः । अहस्कारः । बृहस्पतिः । तस्करः । शास्त्रांतरे त्वित्थं दृश्यते । प्रक्रियाकौमुद्याम् । तद्बृहतोः करपत्योश्चौरदेवतयोः सुडागमस्तलोपश्च। तत् अग्रे–करः । अनेन सुडागमः । तलोपः तस्करः । बृहत् अग्रे पतिः । सकारागमः । तलोपः । बृहस्पतिः । चकारात् हरिश्चंद्रः । मस्करः । मस्करी । परिव्राजकवेण्वोः कांस्कान् । कस्कः । कस्कादयः । एवं अश्वत्थकपित्थदधित्थादिषु स्थाधातोः सस्य तः । इत्यादयः साधवः सिद्धा एव ज्ञेयाः । यल्लक्षणैर्नोपपन्नं तत्सर्वं निपातात्सिद्धमेवेति लक्षणसूत्रमंतरेण लोकप्रसिद्धरूपोच्चारणं निपातनम् ॥

( अह्नो रोऽरात्रिषु ) अह्नो विसर्जनीयस्य पदांते रो भवति रात्र्यादिवर्ज्जितेषु परतः। अहः पतिः अहर्पतिः । अरात्रिष्विति विशेषणात् । अहःरात्रः अहोरात्रः। अहःरूपम् अहोरूपम्।अहः रथंतरम् अहोरथंतरम् ।

सूत्रम् ( अह्नो रोऽरात्रिषु ) अहन् ६—१ । ( अल्लोपः स्वरे०। स्तो० ) अह्नः अग्रे रः १—१ ( स्तो० ) मध्ये । ( हवे । उओ । स्तो० ) रः अग्रे अरात्रि । (अतोऽत्युः । उओ । एदोऽतोतः ) न रात्रयः अरात्रयस्तेषु अरात्रिषु ७—३ । ( क्लिलात्वः सः )अहन्शब्दसंबंधिनो विसर्जनीयस्य पदांते रो भवति रात्र्यादिवर्जितेषु रात्र्यादिभिन्नेषु शब्देषु परेषु सत्सु । रकारादिरात्रिरूपरथंतरादिवर्जितेष्वित्यर्थः । उदाहरणम् । अहन् अग्रे पतिः । अहन् अग्रे गणः ( अह्नः ) इति सूत्रेण उभयत्रापि नस्य सः । ( स्तो० ) अनेन सूत्रेण विसर्गस्य रः । ( राद्यपो द्विः ) जलतुम्बि० । अह्नो दिवसस्य पतिः अहर्प्पतिः । अह्नां गणः अहर्गणः । अत्रांतर्वर्तिनीं विभक्तिमाश्रित्य पदांतत्वं ग्राह्यम् । अरात्रिष्विति विशेषणात् । रात्र्यादिवर्जनात्किम् । अहन् अग्रे रात्रः । ( अह्नः ) इति नस्य सः । अरात्रिष्विति कथनात् रनिषेधः । ततो ( हवे । उ ओ ) अहोरात्रः।एवम् । अहो रूपम्। प्रशस्तम् अहः अहोरूपम् । "अहोरथंतरं साम श्रेष्ठं साम रथंतरम्" । अहोरथंतरम् । पदांत इति किम् । अहोभ्याम् ।

( अतोऽत्युः ) अकारात्परस्य विसर्जनीयस्य उकारो भवति अति परतः ।कः अर्थः कोऽर्थः । ( हवे ) अकारात् परस्य विसर्जनीयस्य उकारो भवति हवे परे । कः गतः को गतः । देवः याति देवो याति । मनः रथः । मनोरथः ।

सूत्रम् ( अतोऽत्युः ) अत् ५—१ स्वर० । ( स्तो० ) अतः अग्रे अत ७—१ । स्वर० । मध्ये ( अतोऽत्यु : । उओ। एदोतोऽतः )अग्रे उ १—१ ( स्तो० )। पश्चात् (इ यं स्वरे ) स्वर० सिद्धिः । वृत्तिः कण्ठ्या[1] । अति परतः अकार एव परे इत्यर्थः । तपरकरणं तावन्मात्रग्रहणार्थं उभयत्रापि सवर्णनिषेधार्थम्। उदाहरणम्।कः अग्रे अर्थः अनेन उकारः । ( उ ओ । एदोतोऽतः ) कोऽर्थः । सूत्रम् ( हवे ) ७—१ ( अइए ) वृत्तिः सुगमा । उदाहरणम् । कः गतः । अत्र अकारातपरस्य विसर्जनीयस्य हवे परे उकारः ततः ( उओ ) को गतः । देवः याति ( हवे । उओ ) देवो याति । मनः रथः ( हवे- उओ ) मनोरथः ।

---

१ प्रसिद्ध इति पाठोऽन्यत्र पुस्तके ।

(आदवे लोपश्)अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यवे परे।देवाः अत्र देवा अत्र। वाताः वाताः वातावाताः।

सूत्रम् (आदवे०) अ ५–१ (ङसिरत्। सवर्णे०) आत्। अव ७–१। (अइ ए) मध्ये (चपा अवे जवाः) लोपश् १–१ (हसे०) यदि वा अश्च आ च आ ५–१ ङसि नपुंसकस्य) इति ह्रस्वः (ङसिरत्) अवर्णात् अकारआकाररूपादुत्तरस्य विसर्जनीयस्य लोपश् भवति अवे परे। उदा०। देवाः अग्रे अत्र। वाताः अग्रे वाताः। उभयत्रापि विसर्गलोपः। देवा अत्र। वाता वाताः। एवं कः इह। क इह।

(स्वरे यत्वं वा)अवर्णात्परस्य विसर्जनीयस्य स्वरे परे यत्वं वा भवति। देवाः अत्र देवायत्र देवा अत्र।

पुनर्विशेषमाह। सूत्रम् (स्वरे यत्वं वा) स्वरे ७–१ (अ इ ए) यत्वं।१–१ (अतो अम्। अम्शसो० मोनु०)। वा ३–१ (अव्य०) वृत्तिः कंठ्या। वाग्रहणात्पक्षे (आदवे लोपश्) देवाः अग्रे अत्र। एकत्र यत्वम्।स्वर०।देवायत्र। अन्यत्र लोपश्। देवा अत्र।

(भोसः) भोस् भगोस् अघोस् इत्येतस्मात्परस्य विसर्जनीयस्य लोपश् भवत्यवे परे। भोः एहि भो एहि। भगोः नमस्ते भगो नमस्ते। अघोः याहि अघो याहि।

सूत्रम् (भोसः) भोस् ५–१ स्वर० (स्रो०)। जातीयग्रहणेन तज्जातीयग्रहणम्। यद्वा[2] भोस् इत्यत्र आद्यंतग्रहणेन प्रत्याहारः सूचितस्तेन भोः भगोः अघोः इत्येतस्मात्पदत्रयात्परस्य विसर्जनीयस्यावे परे लोपश् भवति। उदा०। भोः अग्रे एहि। आगच्छ। भगोः अग्रे नमस्ते। हे भगवन् ते तुभ्यं नमः। अघोः अग्रे याहि। हे अघो हे पाप याहि गच्छ। सर्वत्र (भोसः) इति सूत्रेण विसर्गलोपश् यो वा स्वरे। भो एहि। भोयेहि।

(नामिनो रः) नामिनः परस्य विसर्जनीयस्य रेफो भवति अवे परे। अग्निः अत्र अग्निरत्र। बटुः[3] यजते बटुर्यजते।
[रेफप्रकृतिकस्य खपे वा] रेफाज्जातस्य विसर्जनीयस्य रेफो वा भवति खपे परे। गीः पतिः गीर्पतिः गीᳵपतिः। धूः पतिः धूर्पतिः धूᳵपतिः।

सूत्रम् (नामिनो रः) नामिन् ५–१ स्वर०। (स्रो०) अग्रे रः। १–१। स्रो०

---

१ वाताः वांति वाता वांति इत्यन्यस्मिन्पुस्तके। २ यदिवेत्यपि पाठः। ३ पटुः यजते पटुर्यजते। इत्यपि पाठः।

हबे । उ ओ ) ( नामिनो रः )अवर्णवर्ज्जस्वरात्परस्य विसर्जनीयस्य अबे परे रेफो भवति। उदा० । अग्निः अग्रे अत्र । अनेन सूत्रेण रेफः । स्वर० । अग्निरत्र । बटुः अग्रे यजति। ( नामिनो रः ) इति रेफः ( राद्यपो द्विः ) जलतुं० । बटुर्यजाति । बटुर्ब्राह्मणो यजति यज्ञं करोति । एवं बटुरत्र वर्तते । सूत्रम्( रेफ० ) रेफप्रकृत्या उत्पन्नो वा रेफ एव प्रकृतिर्मूलकारणं यस्य स रेफप्रकृतिकस्तस्य । ६–१ ( ङस्स्य ) खप ७–१ ( अ इ ए ) वा ३–१ । ( अव्य० ) रेफप्रकृतिकस्य विसर्जनीयस्य वा रेफो भवति खपे परे । उदा० । गिर् अग्रे पतिः ( य्वोर्विहसे ) गि इत्यस्य गी । ( स्रो० ) गीः ( रेफप्र० ) अनेन एकत्र रेफः । ( राद्य० ) जल० । अन्यत्र ( कुप्वोः ᳲकᳲपौ वा ) गीर्प्पतिः गीᳲ गीःपतिः एवं रूपत्रयम् । एवं धूर्पतिः धूᳲपतिः धूः पतिः । इत्यादि ।

**( रः ) रेफसंबंधिनो विसर्जनीयस्य रेफो भवत्यबे परे । प्रातः अत्र प्रातरत्र । अंतः गतः अंतर्गतः( रि लोपो दीर्घश्च )रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुनः रमते पुना- रमते । शुक्तिः रूप्यात्मना भाति शुक्ती रूप्यात्मना भाति ।**

सूत्रम् ( रः ) ६–१ । स्वर० । ( स्रो० ) रेफसंबंधिनो रेफाज्जातस्य विसर्जनीयस्य रेफो भवति अबप्रत्याहारे परे । उदा० । प्रातर् अग्रे अत्र । अंतर् अग्रे गतः । उभयत्रापि ( स्रो० ) ततः ( रः ) इत्यनेन पुनरपि रेफः । स्वर० । प्रातरत्रागंतव्यम् । अंतर्गतः । एवं स्वः गतः स्वर्गतः । पुनः आगतः पुनरागतः । सूत्रम् ( रि० ) र् ७–१ स्वर० ( लोपः ) १–१ ( स्रो० ) अग्रे दीर्घः पूर्व ( हबे । उ ओ ) दीर्घ १–१ (स्रो०) दीर्घः अग्रे च १–१ ( अव्य० )प्राक् ( विसर्जनीयस्य सः । स्तोःश्चुभिः श्चुः)सिद्धम्। सूत्रं चतुः पदम्। रेफेति वृत्तिः सुगमा । पुनः अग्रे रमते(रः)इति रेफः । ( रि लोपो० ) इति रलोपः । पूर्वस्य च दीर्घः । न इत्यस्य ना । शुक्तिः अग्रे रूप्यात्मना भाति ( नामिनो रः । रि लोपो० )पूर्वस्य च दीर्घः।शुक्ती रूप्यात्मना भाति । शुक्तिः रजताकारेण भासते इत्यर्थः । एवं हरी राजते । शंभू रमते ।

**(सैषाद्धसे ) सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश्च भवति हसे परे । सःचरति स चरति । एषः हसति एष हसति ।**

सूत्रम् (सैषा० )स च एष च सैषं तस्मात्सैषात् ५–१ । ( ङसिरत् । सवर्णे० ) हसे ७–१ । ( अ इ ए ) मध्ये । हो झभाः ( चपा अबे० ) अत्र समासे कृते तदेतदोर्हसे इति संभवेऽपि ( सैषाद्धसे ) इति यत् सूत्रं कृतं ततः तैः एतैः सकः एषकः । न सः असः इत्यादौ हसे परे विसर्गलोपशप्राप्तिनिवारणार्थमित्यर्थः । केचित्पुनराहुः।

---

१ रेफाज्जातस्येत्यन्यत्र पाठः ।

सः इति पृथक्पदं पंचम्येकवचनांतं सांकेतिकम् । एषात्पंचम्येकवचनम् । हसे सप्तम्यंतम्) स एषात् इत्यत्र ( आदबे लोपश् ) इति विसर्गलोपशं विधाय पश्चात् ( ए ऐ ऐ ।

**(सैषादिति संहिता) सैष दाशरथी रामः सैष राजा युधिष्ठिरः॥ सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ १ ॥ इत्यादौ पादपूरणे संध्यर्था ज्ञेया । यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् । सेमां भूम्याददे सोषामित्यादीनामदुष्टता ॥ २ ॥**

नन्वत्र लोपशि कृते पुनः संधिः कथं कृतः इत्यग्रे वक्ष्यति । सैषादिति संहितेत्यादिना । तद् एतद् उभयत्रापि १–५ ( त्यदादेष्टेरः स्यादौ ) इति दलोपः । ( स्तः ) इत्युभयत्रापि तस्य सः । एस इत्यत्र ( किलात्ष सः० । स्रो० ) तदेतदोर्निष्पन्नाभ्यां सएषशब्दाभ्यां इत्यर्थः । शेषं कंठ्यम् । उदा० । सः अग्रे चरति । एषः अग्रे हसति । उभयत्रापि ( सैषाद्धसे ) इति विसर्गलोपश् ( सैषाद्धसे ) इति सूत्रे ऋजुतया कर्त्तव्ये सैषादिति यत्सूत्रमध्ये या अघटमाना अकारैकारयोः ( ए ऐ ऐ ) इति संहितासंधिर्दर्शिता सा सएषशब्दयोः। सैष दाशरथीरामः इत्यादि अष्टाक्षरात्मकं पादपूरणार्थम् । लोपशि कृतेपि यः ( ए ऐ ऐ ) इति संधिर्भवति तज्ज्ञापनार्थमित्यर्थः । श्लोकः । सैष० । स अग्रे एषः ( आदबे लोपश् । ए ऐ ऐ ) इति संधिर्भवति । एवमपरपादत्रयेऽपि । स एषः दाशरथिः। दशरथस्यापत्यं दाशरथिः दशरथपुत्रो रामो वर्त्तते । स एष युधिष्ठिरो राजा युधि संग्रामे स्थिरः युधिष्ठिरः ( किलात्षः सः कृतस्य )इति षत्वम् ( ष्टुभिः ष्टुः ) स एष कर्णः राजा महात्यागी महादानी वर्त्तते । स एष भीमो भीमपांडवः महाबली अतिबलिष्ठो वर्त्तते इत्यादि । अर्थः सुगमः ॥१॥ इत्यादौ पादपूरणे संध्यर्था। पादपूरणे यः संधिः स एव अर्थः प्रयोजनं यस्याः सा । पुनः वैदिकप्रयोगविशेषमाह । यदुक्तम्०। यत्सूत्रं इहास्मिन् शास्त्रे लौकिकाय प्रयोगाय व्याकरणप्रसिद्धोदाहरणसाधनायोक्तं सूत्रादि तद्वेदे छंदसि बहुलं अन्यथा भवति अनिश्चितं विभजनतया भवेत् । क्वचिद्भवति क्वचिन्न भवतीत्यर्थः ।उदाहरणम् । सः अग्रे इमाम्। (आदबे लोपश्- अ इ ए ) भूमिः अग्रे आददे छांदसत्वात्कंचिन्नामिनोप्यबे विसर्गलोपश् । ततः ( इ यं स्वरे ) भूम्याददे । सः अग्रे उषाम् ( आदबे लोपश् । उ ओ ) इत्यादीनामार्षप्रयोगाणां वैदिकप्रयोगाणामदुष्टता न दोष इत्यर्थः । स इमां भूमिमपुनात् भूमेश्च रसं आददे ततः स उषां गां आनयामास ॥ २ ॥

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**

१ ( नामिनो लोपः ) नामिनः परस्य विसर्जनीयस्य लोपो भवति क्वचिदबे परे । भूमिः आददे बीजं भूम्याददे बीजम् इ० पा० ।

**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदंति ॥ ३ ॥**

बाहुलकं कतिधेत्याह । क्वचिदिति।क्वचित्प्रयोगे अनुक्तस्यापि प्रवृत्तिः अप्राप्तस्य असंभवतः सूत्रस्य प्रापणं प्रवृत्तिः प्राप्तिः । यथा लोपशि पुनर्न संधिरिति निषिद्धत्वेपि (अ इ ए) इति संधेःप्राप्तिः । क्वचित्प्रयोगान्तरे उक्तस्याप्यप्रवृत्तिः कथितस्यापि सूत्रस्य निषेधः । यथा भूमिः अग्रे–आददे इत्यत्र (नामिनो रः) इत्यस्य अप्राप्तिः । क्वचिद्विभाषा विकल्पः । यथा वेदे । देवैः देवेभिः । गवेशः । गवीशः । क्वचित् अन्यदेवोक्तं अन्यदेव भवति । एवममुना प्रकारेण विधेर्व्याकरणसूत्रस्य विधानं करणं बहुधा बहुप्रकारं समीक्ष्य दृष्ट्वा बाहुलकं वैदिकप्रयोगं चतुर्विधं वदंति कथयंति । बुधा इत्यध्याहारः । वैदिकं चतुर्धोक्तम् ॥ ३ ॥

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तम् ॥४॥**

अथ लौकिकप्रयोगः कतिधा भवतीत्याह।वर्णा० । एको वर्णागमः च पुनर्वर्णविपर्ययः। पूर्वोच्चारितस्य स्थाने परवर्णोच्चारणम्, परवर्णस्य स्थाने पूर्ववर्णोच्चारणं वर्णविपर्ययः । पुनर्द्वावपरौ भेदौ, कौ तौ वर्णविकारवर्णनाशौ । पूर्वावस्थापरित्यागेन अवस्थांतरापादनं विकारः । सर्वथा लोपो नाशः । वर्णानामक्षराणां विकारनाशौ वर्णविकारनाशौ । पंचमश्च भेदःधातोस्ताभ्यां वर्णविकारवर्णनाशाभ्यां कृत्वा पुनर्धातोरर्थातिशयेन च कृत्वा धातोर्योऽर्थातिशयः अधिकता कश्चिद्विशेषो य अर्थातिशयस्तेन च यो भवति स योग इति नाम्ना पञ्चमो भेदः । तत्तस्मान्निरुक्तं निश्चयेन उक्तोऽर्थो यस्य तन्निरुक्तं व्याकरणोदाहरणम् ॥ ४ ॥

**वर्णागमो गवेंद्रादौ सिंहे वर्णविपर्य्ययः ।**
**षोडशादौ विकारः स्यात् वर्णनाशः पृषोदरे ॥ ५ ॥**

पंचविधमुच्यते तानेव पंच व्यंजयति।अथ लौकिकःप्रयोगःकतिधा भवतीत्याह ।वर्णा० । गवेन्द्रादौ वर्णागमः । गवादेरवर्णागमोऽक्षादाविति । एवं हन् हिंसागत्योः । हन् अप्रत्ययः सकारागमः । हिंस इति सिंहे वर्णविपर्ययो भवति । यथा हिंस् हिंसायाम्।(मूर्त्तौ घनः)इति अप्रत्ययः । हिंस इति स्थिते हिनस्तीति विग्रहे ततः हिंस इति शब्दे हस्य स्थाने सः सस्य स्थाने हः एवं वर्णविपर्य्ययः सिंह इति सिद्धम् । षोडशादौ यथा । षट् च दश च इति विग्रहे षष् दश अत्र (षष उर्दो डः)षस्य उः दस्य ड इति वर्णविकारः । ततः(उ ओ) षोडश इति विकारोदाहरणम् । गूढः अग्रे–आत्मा। बंधुजनः अग्रे–आजुहाव । कुरवः अग्रे–आत्महितं इत्यादिषु वर्णविकारं आकारस्य अकारं विधाय ( अतोत्युः । उ ओ ।

१ कथं–इति पुस्तकान्तरे ।

एदोतोऽतः) गूढोऽत्मा । बंधुजनोऽऽजुहाव । कुरवोऽत्महितम् ।पृषोदरे वर्णनाशः।यथा पृषत् अग्रे–उदरः ।तकारस्य नाशो लोपः ( ड ओ ) पृषोदरः। पृषंति बिंदवः उदरे यस्य स पृषोदरःमृगः । अथवा पृषन्मृगस्तस्योदरमिव उदरं यस्य स पृषोदरः ॥ ५ ॥

**वर्णनाशविकाराभ्यां धातोरतिशयेन यः । योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ६ ॥ इति विसर्गसंधिः समाप्तः ।**

वर्ण०। वर्णस्य अक्षरस्य नाशविकाराभ्यां कृत्वा धातोः अतिशयेन अर्थविशेषेण कृत्वा यः उत्पद्यते सः प्राज्ञैः पंडितैर्योग इत्युच्यते । क्व मयूरभ्रमरादिषु । मयूरः भ्रमरः इत्याद्युदाहरणेष्वित्यर्थः । यथा 'रु शब्दे' रुरु एकत्र महीपूर्वः अन्यत्र भ्रमन्पूर्वः। मह्यामतिशयेन रौति जल्पतीति मयूरः। भ्रमन् सन् अतिशयेन रौतीति भ्रमरः। (नाम्नि च ) इति डः प्रत्ययः । डित्वाट्टिलोपः । स्वर०एकत्र विकारः हीस्थाने यू । अन्यत्र वर्णनाशः नकारस्य नाशः लोपः । मयूरः । भ्रमरः । इति सिद्धम् । अन्येषां मते तु एते पंचापि पृषोदरादिभेदा एव ॥ ६ ॥ इति विसर्गसंधिः संपूर्णः ॥

**अथ विभक्तिर्विभाव्यते। सा द्विधा स्यादिस्त्यादिश्च ।(विभक्त्यंतं पदम्) तत्र स्यादिर्विभक्तिर्नाम्नो योज्यते।(अविभक्ति-नाम ) विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामो-च्यते। कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञका इति केचित्।**

अथेति पंचमसंधिकथनानंतरं विभक्तिर्विभाव्यते कथ्यते।विभज्यंते पृथक् क्रियंते कर्तृ-कर्म्मादयो यया सा विभक्तिः । सा विभक्तिर्द्विधा द्विप्रकारा।एका स्यादिः। सि औ जस्[१] इत्यादिका । अपरा[२] त्यादिः।तिप् तस् अंति इत्यादिका।विभक्तेःप्रयोजनमाह।सूत्रम् ।(विभ-क्त्यंतं पदम् ) विभक्तिरंते यस्य तत् विभक्त्यंतम्।यस्यान्ते विभक्तिस्तत्पदमुच्यते । तत्र विभक्तिद्वयमध्ये स्यादिर्विभक्तिर्नाम्नो अग्रे–योज्यते स्थाप्यते दीयते । त्यादिर्विभक्ति-र्धातोः अग्रे योज्यते स्थाप्यते । नामलक्षणमाह । सूत्रम् ( अविभक्ति नाम ) नास्ति विभक्तिर्यस्य तत् अविभक्ति १–१ । ( नपुसंका० ) सेर्लोपः । नामन् १–१ । ( नपुसंका० नाम्नो नो०)नस्य लोपः सिद्धम् । द्विपदम् । विभक्त्या रहितं धातोः भ्वादेः पृथक्भूतम् अर्थयुक्तं शब्दरूपमकारादिवर्णरूपं तन्नाम उच्यते ।शब्दरूपं नामेत्युक्ते पद-स्यापि नामसंज्ञा स्यात्तन्निवारणार्थं अविभक्ति इति । तथा सति. धातावतिव्याप्तिस्तन्नि-वारणार्थं धातुवर्ज्जमिति । तथा सति निरर्थकस्य टस् इत्यादिध्वनेर्नामत्वं तन्निवारणार्थं अर्थवदिति । ईदृग्लक्षणं नामोच्यते। च पुनः कृत्तद्धितसमासाः सविभक्तिका अपि नाम-संज्ञकाः स्युः । केचिदित्याहुः। कृतः तृतीयवृत्तिप्रत्ययाः । तदंताः शब्दाः धातवः

---

१ असौ–इति पाठः । २ एका इति पाठः पुस्तकान्तरे ।

तद्धितांताः समासाश्च नामसंज्ञका भवंति इति केचिदिति पाणिन्याचार्या इति वदंति ।एते सर्वेऽपि प्रातिपदिकसंज्ञका नामसंज्ञकाः उच्यंते तन्मते प्रातिपदिकं इति नामपर्यायः ।

( तस्मात् । सि औ जस् । अम् औ शस् । टा भ्यां भिस् । ङे भ्यां भ्यस् । ङसि भ्यां भ्यस्।ङस् ओस् आम्। ङि ओस् सुप् ) तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवंति । तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचनम् सि।देव सि इति स्थिते । इकार उच्चारणार्थः । ( स्रोर्विसर्गः ) सकाररेफयो र्विसर्जनीयादेशो भवत्यधातो रसे पदांते च। देवः।द्वित्वविव क्षायामौ।( ओ ओ औ ) देवौ।बहुत्वविवक्षायां प्रथमा बहु-वचने जस् । जकारस्येत्संज्ञा । इत्संज्ञायां तस्य लोपः।प्रयो-जनं च जसीति विशेषणार्थः । देव अस् इति स्थिते । दीर्घे-विसर्गौ देवाः ।

सूत्रम् (तस्माद्यावत्सुप्) । तद् ५-१ । ( त्यदादेष्टेरः० ) दलोपः ( ङसिरत् अतः) इति स्मडागमः । सवर्णे० ) सिश्च औश्च जस् च यावत्सुप् च १-३ । सांके० । यद्वा तस्मादिति पंचम्येकवचनांतं अग्रे सि औ जस् इत्येकविंशतिरपि सांकेतिकप्रथमैकवचनां तानि पदानि। एवं द्वाविंशतिपदं सूत्रम् ।अष्टपदमित्यपि केचित् । सुप् इत्यत्र पकारः पाणिनीयानां सु औ जस् इति प्रथमैकवचनस्यापि सु इति संज्ञा तस्माद्भेदज्ञापनार्थः सुप्प्र-त्याहारार्थश्च । अत्र तु सुखमुखोच्चारणार्थ एव तस्मात्पूर्वोक्तान्नाम्नः पराः एताः पूर्वोक्ताः स्यादयः सप्त विभक्तयो भवन्ति । तत्र सि औ जस् प्रथमा १ । अम् औ शस् द्विती-या २ ।टाभ्यां भिस् तृतीया ३ । ङे भ्यां भ्यस् चतुर्थी ४ । ङसि भ्यां भ्यस् पंचमी५ । ङस् ओस् आम् षष्ठी ६ । ङि ओस् सुप् सप्तमी।७।एकैकस्या विभक्तेस्त्रीणि त्रीणि वचनानि एकवचनद्विवचनबहुवचनसंज्ञानि भवंति तत्रापि नाम्नि सप्तसु विभक्तिषु वा अर्थमात्रस्यै-कत्वविवक्षायां अर्थमात्रस्य घटपटादेः एकस्य वक्तुमिच्छा क्रियते यत्र तत्र प्रथमैकवचनं सि दीयते । तत्र प्रथमं देवशब्दः दिवु क्रीडायाम् । दीव्यतीति देवः । पचनंदिग्रहादेः० । इति अप्रत्ययः गुणः देव इति जातम् ततः देव सि इति स्थिते सति इकार उच्चारणार्थः। ( सेर्डाधेः । सेरा ) इति सूत्रे विशेषणार्थश्च इत्संज्ञत्वाव इकारलोपः ।देव स् इति स्थिते सूत्रम् ( स्रो० ) स् च र् च स्रौ तयोः स्रोः ६-२। स्वर० । विसर्गः १-१ । स्रो० । द्विपदं मध्ये ( नामिनो० ) सकारस्य रेफस्य च विसर्गो भवति अधातोः नाम्नः शब्दस्य

---

१ बहुवचनं इ० पा० । २ विशेषणमित्येकत्र । विशेषणार्थमित्यन्यत्र ।

रसे परे चकारात्पदांते तु धातुनाम्नोः उभयोरपि नाम्नः सकाररेफयो रसे परे पदांते च विसर्गादेशः। चकारात्पदांते धातोरपि सकाररेफयोर्विसर्गादेशः। यथा अचकाः अबिभः ॥ रसे परे धातोर्न । यथा आस्ते बिभर्ति इत्यादौ । अनेन विसर्गः । देवः इति सिद्धम् । द्वित्वविवक्षायाम् औ । द्वयोर्वक्तुमिच्छा यत्र क्रियते तत्र द्विवचनम्।[1]यथादेव श्च देवश्चेत्येकशेषे । सरूपाणामेकशेष एकविभक्तौ । इति देव औ इति स्थिते । ( ओ औ औ ) देवौ । एवम् देवश्च देवश्च देवश्चेति बहूनां उक्तौ प्रथमाबहुवचनम्। १–३ । जस् । जकारो जसीति सूत्रविशेषणार्थः । अन्यथा असीत्युच्यमाने शस् । ङस् संबंधिनाऽप्यस ईकारः स्यात । जकारः इत्संज्ञकः । देव अस् ( सवर्णे० । स्रो० देवाः ॥

[अकाराज्जसोऽसुक्क्वचिद्वक्तव्यः ] देवासः । ब्राह्मणासः । द्वितीयैकवचने देव अम् इति स्थिते । ( अम्शसोरस्य ) समानादुत्तरयोरम्शसोरकारस्य लोपो भवति अधातोः । देवम् । देवौ । बहुवचने देव शस् इति स्थिते । शकारः शसीति विशेषणार्थः[3] ।

विशेषमाह ( अकाराज्जसोऽसुक् क्वचिद्वक्तव्यः ) क्वचित्प्रयोगांतरे अकरात्परस्य जसः असुक् आगमो भवति छंदसि वेदविषये । देव १–३ अ न असुक् आगमः । कित्वादंते स्वर० ( स्रो० । सवर्णे० ) देवासः । कर्मैकत्वविवक्षायां द्वितीयैकवचने देव अम्। सूत्रम् । अम् च शस् अन्शसौ तयोः अम्शसोः अम्शस् ६–२ स्व० ( स्रो० ) अ ६–१ ( ङस्स्य । नामिनोरः ) सिद्धम् द्विपदम् । समानात्परस्य अम्शस्संबंधिनः अकारस्य लोपो भवति अधातोः अक्विबंतात् शब्दादित्यर्थः । अनेन अकारलोपः ( मोनु० ) देवं देवौ पूर्ववत् । द्वितीयाबहुवचने शस् शकारः शसीति विशेषणार्थः इत्संज्ञकः उच्चारणमात्रः अस् लिख्यते । अम्शसोरित्यकारलोपः ।

(सो नः पुंसः) पुँल्लिंगात्समानादुत्तरस्य शसःसकारस्य नकारादेशो भवति(शसि)शसि परे पूर्वस्य स्वरस्य दीर्घो भवति। यदादेशस्तद्वद्भवति नतु वर्णमात्रविधौ । देवान् । तृतीयैकवचने देव टा इति स्थिते । टकारोनुबंधष्टेनेति विशेषणार्थः ।

सूत्रम् ६–१ स्वर० ( स्रो० ) न १–१ ( स्रो० ) पुंस् ५–१ स्व० ( स्रो० ) पुँल्लिंगे वर्तमानात्समानादुत्तरस्याग्रतः शसः सकारस्य नकारादेशो भवति । सूत्रम् शस्

---

१ शब्दयोः- इ० पा० । २ यद्वा इ० पा० । ३ कार्यार्थः- इत्यन्यास्मिन्पुस्तके पाठः ।

